॥ भगवत्प्रातःस्मरणम् ॥

श्री गणेशाय नमः ।
प्रातः स्मरामि फणिराजतनौ शयानं
नागामरासुरनरादिजगन्निदानम् ।
वेदैः सहागमगणैरूपगीयमानं
कान्तारकेतनवतां परमं निधानम् ॥ १॥

प्रातर्भजामि भवसागरवारिपारं
देवर्षिसिद्धनिवहैर्विहितोपहारम् ।
संदृप्तदानवकदम्बमदापहारं
सौन्दर्यराशिजलराशिसुताविहारम् ॥ २॥

प्रातर्नमामि शरदम्बरकान्तिकान्तं
पादारविन्दमकरन्दजुषां भवान्तम् ।
नानावतारहृतभूमिभरं कृतान्तं
पाथोजकम्बुरथपादकरं प्रशान्तम् ॥ ३॥

श्लोकत्रयमिदं पुण्यं ब्रह्मानन्देन कीर्तितम् ।
यः पठेत्प्रातरुत्थाय सर्वपापैः प्रमुच्यते ॥ ४॥

इति श्रीपरमहंसस्वामिब्रह्मानन्दविरचितं
श्रीभगवत्प्रातःस्मरणं सम्पूर्णम् ॥